(६) अत्रासादने वैश्वदेवान्नासादनं तत्प्रोक्षणं च विशेषः। तद्यथा—

ततः प्रणीतापात्रं पुरतः कृत्वा वारिणा परिपूर्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्य अग्नेरुत्तरतः कुशोपरि निदध्यात्।

ततः परिस्तरणम्—बर्हिषश्चतुर्थभागमादाय आग्नेयादीशानान्तं ब्रह्मणोऽग्निपर्यन्तं नैर्ऋत्यादिवायव्यान्तम्, अग्नितः प्रणीतापात्रपर्यन्तम्।

ततोऽग्नेरुत्तरतः पश्चिमदिशि पवित्रच्छेदनार्थं कुशत्रयम्। पवित्रकरणार्थं साग्रमनन्तर्गर्भकुशपत्रद्वयम्। प्रोक्षणीपात्रम्। आज्यस्थाली, सम्मार्जनार्थं कुशत्रयम्। उपयमनार्थं वेणीरूपं कुशत्रयम्, समिधस्तिस्रः, स्रुवः, आज्यम्। स्थालीपाकार्थं तण्डुलमुष्टिद्वयम्। वैश्वदेवान्नम्। षट्पञ्चाशदुत्तरमुष्टिशतद्वयावच्छिन्नतण्डुलपूर्णं पात्रम्। पवित्रच्छेदनकुशानां पूर्वपूर्वदिशि क्रमेण आसादनीयम्।

ततः पवित्रच्छेदनकुशैः पवित्रे छित्त्वा ततः सपवित्रकरेण प्रणीतोदकं त्रिः प्रोक्षणीपात्रे निधाय अनामिकाङ्गुष्ठाभ्यामुत्तराग्रे पवित्रे गृहीत्वा त्रिरुत्पवनम्। ततः प्रोक्षणीपात्रस्य सव्यहस्ते करणम्। अनामिकाङ्गुष्ठाभ्यां पवित्रे गृहीत्वा त्रिरुद्दिङ्गनम्। प्रणीतोदकेन प्रोक्षणीप्रोक्षणम्। प्रोक्षणीजलेन

यथासादितवस्तुसेचनम्। ततोऽग्निप्रणीतयोर्मध्ये प्रोक्षणीपात्रनिधानम्।

तत आज्यस्थाल्यामाज्यनिर्वापः। ततोऽधिश्रयणम्। (आज्यस्य स्थालीपाकार्थं सजलतण्डुलस्थाल्याश्चाधिश्रयणम्।) ततो ज्वलत्तृणादिना आज्यं स्थालीपाकं च वेष्टयित्वा वह्नौ तत्प्रक्षेपः। पर्यग्निकरणम्।

ततः स्रुवप्रतपनं कृत्वा सम्मार्जनकुशानामग्रैरन्तरतो मूलैर्बाह्यतः स्रुवं सम्मृज्य प्रणीतोदकेन अभ्युक्ष्य पुनः प्रतप्य स्रुवं दक्षिणतो निदध्यात्।

तत आज्यस्य स्थालीपाकस्य च अग्नेरवतारणम्। तत आज्ये प्रोक्षणीवदुत्पवनम् अवेक्ष्य सत्यपद्रव्ये तन्निरसनम्। पुनः प्रोक्षण्युत्पवनं च कृत्वा तत उपयमनकुशानादाय उत्तिष्ठन् प्रजापतिं मनसा ध्यात्वा तूष्णीमग्नौ घृताक्तास्तिस्रः समिधः क्षिपेत्।

तत उपविश्य सपवित्रप्रोक्षण्युदकेन प्रदक्षिणक्रमेण अग्निं पर्युक्ष्य प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुः कुशेन ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ स्रुवेण आज्याहुतीर्जुहोति।

तत्र आघाराज्यभागयोश्चतसृष्वाहुतिषु स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः। प्रजापतये स्वाहा। इदं

प्रजापतये न मम इति मनसा । इन्द्राय स्वाहा । इदमिन्द्राय न मम । इत्याघारौ । अग्नये स्वाहा । इदमग्नये न मम । सोमाय स्वाहा । इदं सोमाय न मम । इत्याज्यभागौ ।

(७) घृतेन स्थालीपाकमभिघार्य स्रुवेण चरुमादाय हवनं कुर्यात् ।

तद्यथा—

(१) 'अग्नये स्वाहा' इदमग्नये ।

(२) 'अग्नीषोमाभ्याᳪस्वाहा' इदमग्नीषोमाभ्याम् ।

(३) उपांशु पुनः 'अग्नीषोमाभ्याᳪस्वाहा' इदमग्नीषोमाभ्याम् ।

(४) उच्चैः स्वरेण 'ब्रह्मणे स्वाहा' इदं ब्रह्मणे ।

(५) 'प्रजापतये स्वाहा' इदं प्रजापतये ।

(६) 'विश्वेभ्यो देवेभ्यः स्वाहा' इदं विश्वेभ्यो देवेभ्यः ।

(७) 'द्यावापृथिवीभ्याᳪस्वाहा' इदं द्यावापृथिवीभ्याम् ।

हुतशेषं स्रुवेण अग्नेरुत्तरतः प्राक्संस्थम् ।

(१) 'विश्वेभ्यो देवेभ्यो नमः' इदं विश्वेभ्यो देवेभ्यः ।

(२) 'भूतगृह्येभ्यो नमः' इदं भूतगृह्येभ्यः ।

(३) 'आकाशाय नमः' इदमाकाशाय ।

—एभिर्मन्त्रैः स्रुवेण बलित्रयं दद्यात् । ततोऽभिघारितवैश्वदेवान्नात्स्रुवेणादाय 'अग्नये स्वाहा' इदमग्नये । 'प्रजा-

पतये स्वाहा' इदं प्रजापतये । 'विश्वेभ्यो देवेभ्यः स्वाहा' इदं विश्वेभ्यो देवेभ्यः । इत्याहुतित्रयमग्नौ हुत्वा स्थालीपाकोत्तरार्द्धाद्वैश्वदेवोत्तरार्द्धाच्च 'अग्नये स्विष्टकृते स्वाहा' इदमग्नये स्विष्टकृते इति हुत्वा 'भूः' इत्यादि प्राजापत्यान्ता नवाहुतीर्जुहुयात् । तद्यथा—

(१) भूः स्वाहा । इदमग्नये न मम ।

(२) भुवः स्वाहा । इदं वायवे० ।

(३) स्वः स्वाहा । इदं सूर्याय० । एता महाव्याहृतयः ।

(४) त्वन्नो अग्ने इति वामदेव ऋषिरग्नीवरुणौ देवते त्रिष्टुप्छन्दो होमे विनियोगः । त्वन्नो ऽअग्ने व्वरुणस्य व्विद्वान्देवस्य हेडो ऽअवयासिसीष्ठाः । यजिष्ठ्ठो व्वह्नितमः शोशुचानो व्विश्वाद्वेषा॑ᳬसि प्रमुमुग्ध्यस्मत्स्वाहा ॥ इदमग्नीवरुणाभ्यां०

(५) सत्वन्नो ऽअग्ने वमो भवोती नेदिष्ठ्ठोऽअस्या उषसो व्युष्टौ अवयक्ष्व नो व्वरुणᳬरराणो व्वीहि मृडीकᳬसुहवो न ऽएधि स्वाहा । इदमग्नीवरुणाभ्यां०

(६) अयाश्चाग्ने इति वामदेव ऋषिरग्निर्देवता त्रिष्टुप् छन्दः सर्वप्रायश्चित्तहोमे विनियोगः ॥

अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्त्वमित्वमया असि अयानो यज्ञं वहास्ययानो धेहि भेषजᳬ स्वाहा । इदमग्नये०

(७) ये ते शतं व्वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च० ॥

(८) उदुत्तमं व्वरुणपाशमस्मदवाधमं व्विमध्यमꣳ श्रथाय । अथा व्वयमादित्यव्व्रते तवानागसो अदितये स्याम स्वाहा । इदं वरुणाय० एताः प्रायश्चित्तसंज्ञकाः ।

(९) प्रजापतये स्वाहा । इदं प्रजापतये न मम ।

संस्रवप्राशनं मार्जनं पवित्रप्रतिपत्तिः, न प्रणीताविमोकः। ब्रह्मणे दक्षिणादानान्तं कृत्वा चरुशेषमादाय शालाया बहिरुपलिप्तायां भूमौ प्राङ्मुख उपविश्य स्रुवेण स्त्र्यादिभ्यो बलिं दद्यात् ।

(१) 'नमः स्त्रियै' इदं स्त्रियै० ।

(२) 'नमः पुꣳ से वयसे नमः' इदं पुꣳ से वयसे० ।

(३) 'नमः शुक्लाय कृष्णदन्ताय पापिनां पतये नमो ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वारण्ये तेभ्यः ।' इदं ये मे इत्यादि० ।

(४) नमोऽस्तु ब्रलिमेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे ददतु। इदं स्त्रियै पुंस्से वयसे शुक्लाय कृष्णदन्ताय पापिनां पतये ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वारण्ये तेभ्यः। इदमेभ्यः० इति वा त्यागः। शेषं प्रणीताद्भिः प्रप्लाव्य, आचम्य, अग्निसमीपमागत्य प्रणीताविमोकं कृत्वा, 'एकस्मै ब्राह्मणाय भोजनं ददामि' इति सङ्कल्पयेत्।

इति पक्षादिकर्मविधिः।

## अथ दर्शयागः

दर्शे पुनरियान् विशेषः स्थालीपाकेनाग्नये विष्णवे इन्द्राग्निभ्यामिति दर्शदेवताभ्यो होमः, अनुदिते चारम्भः, शेषं समानम्।

## अथैककर्मत्वम्

सायमादिप्रातरन्तमेकं कर्म प्रचक्षते।
पौर्णमासादिदर्शान्तमेकमेव विदुर्बुधाः॥

इति वचनात्।

कृष्णपक्षे यद्याधानं तदा दर्शमनिष्ट्वैव पौर्णमास्यां पक्षादिकर्मारम्भः। यत्तु छन्दोगपरिशिष्टवचनम्—

'ऊर्ध्वं पूर्णाहुतेर्दर्शः पौर्णमासोऽपि चाग्रिमः ।
य आयाति स होतव्यः स एवादिरिति श्रुतेः ॥'
तत्पुनराधानविषयं तच्छाखिविषयं वा ॥

## पक्षादिशब्दव्याख्या ( यागकालः )

पक्षाणामादयः पक्षादयः तासु पक्षादिषु प्रतिपत्सु । अत्र यद्यपि पक्षादिष्वित्युक्तं तथापि सन्धिमभितो यजेतेति वचनात् ।

'पर्वणो यश्चतुर्थांश आद्याः प्रतिपदस्त्रयः ।
यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिः ॥'
इति पर्वचतुर्थांशोऽपि यागकालत्वेनाभिमतः ॥

## आमध्याह्नं यागकालः

पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते ।
तदैव यागकालः स्यात्परतश्चेत्परेऽहनि ॥

तत्रापि—

सन्धिर्यदा पराह्णे स्याद्यागं प्रातः परेऽहनि ।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति ॥

॥ इति यागकालनिर्णयः ॥



# पक्षहोमविधिः

## ( समासहोमविधिः )

तत्र यजमानस्य आमयादिनिमित्ते रोगार्त्तविघ्नगमने राष्ट्रभ्रंशे धनाभावे गुरुगृहवासे अन्यास्वपि भयाद्यापत्सु होमानां समासो भवति। तद्यथा—

प्रतिपदि सायंकाल आहुतिपरिमाणं होमद्रव्यं चतुर्दशकृत्व एकस्मिन् पात्रे कृत्वा अग्नये स्वाहेति हुत्वा पुनस्तथैव चतुर्दशकृत्वो होमद्रव्यं गृहीत्वा प्रजापतये स्वाहेति जुहुयात्। एवमेव होमद्रव्यं चतुर्दशकृत्व एकस्मिन् पात्रे कृत्वा सूर्याय

स्वाहेति प्रातर्हुत्वा पुनस्तथैव चतुर्दशकृत्वो होमद्रव्यं गृहीत्वा प्रजापतये स्वाहेति जुहुयात् ।

ततो दक्षिणेन पाणिना प्रागग्रामुत्तरारणिं गृहीत्वा सव्येनाधरारणिमग्नेरुपरि धारयन् 'अयं ते योनिः' इति मन्त्रेणाग्निं समारोप्यारणी धारयेत् ।

अथ पौर्णमास्याममावास्यायां वा प्राप्तायां प्रातररण्यो-रग्निं निर्मथ्य कुण्डे निधायावसरप्राप्तं वैश्वदेवादिकं कर्म विधाय सायंकाले सायंहोमं प्रातःकाले प्रातर्होमं हुत्वा पक्षादिहोमं कुर्यात् । एतावतापि कालेन यद्यापन्न निवर्त्तते तदा उक्तविधिना पुनः पक्षहोमान् कुर्यात् ।

तृतीये पक्षे तु आपदनुवृत्तावपि न पक्षहोमविधिः किं तु कृच्छ्रेणापि पृथगेव सायंप्रातर्होमान् विदध्यात् । ततोऽप्यापद-नुवृत्तौ पुनरुक्तविधिना पक्षे पक्षे होमसमासं कुर्यात् । न तु तृतीये पक्षे । एवं यदैवापन्निमित्तं तदाद्यौपवसथ्याहप्रात-र्होमपर्यन्तानां होमानां समासं कुर्यात् । न पक्षान्तरगतानाम् ।

कठश्रुतिपक्षे तु न पक्षद्वयमेव पक्षहोमनियमः; अपि तु आपदनुवृत्तौ यावदापन्निवृत्तिस्तावत्प्रतिपक्षमुक्तप्रकारेण निरन्तरं पक्षहोमान् समस्येदित्येकः प्रकारः । प्रकारान्तरं तु सायंकाले समिदाधानपर्युक्षणानन्तरम् आहुतिपरिमाणं होम-

द्रव्यमग्नये स्वाहेति हुत्वा पुनस्तथैव सूर्याय स्वाहेति हुत्वा आहुतिद्वयपर्याप्तं होमद्रव्यमादाय प्रजापतये स्वाहेति सकृज्जुहुयात् ।

इति सायंप्रातस्तनयोः समासं यावदापदमाचरेत् । यदा त्वापदो गुरुत्वं भवति तदा सायंहोमैरेव अनेन विधिना प्रातर्होमानां समासं कुर्यात् । एवं पक्षहोमसमासे कृते यद्यन्तराले आपन्निवृत्तिस्तदा प्रत्यहं सायंप्रातर्होमान् हुतानपि जुहुयात् न वेति कठा आमनन्ति ।

एते च होमसमासाः सायमुपक्रमाः प्रातरपवर्गा इत्युत्सर्गः। आपद्विशेषे तु प्रातरुपक्रमाः सायमपवर्गाः पूर्वाह्णापराह्णादि-कालानपेक्षा अपि बोद्धव्याः; यतस्तत्रापत्कालपुरस्कारेणैव होमसमासोत्क्रमो युज्यते ॥



## मणिकावधानपद्धतिः

ततो मणिकावधाननिमित्तमातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा अग्नेरीशानप्रदेशे—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् आददे नार्यसि' इति मन्त्रेणाभ्रिमादाय—'इदमहꣳ रक्षसां ग्रीवा अपि कृन्तामि' इत्यवटं भाण्डानुमानं परिलिख्य उदकस्पर्शं कृत्वा खात्वा प्रत्यञ्चः (प्रतीचः) पांसूनपास्य कुशानास्तीर्य अक्षतान् अरिष्टकान् ऋद्धिवृद्धिहरिद्रादूर्वादिमङ्गलद्रव्यं निक्षिप्य तदुपरि—'समुद्रोऽसि नभस्वानार्द्रदानुः शम्भुः' इत्येतावता मन्त्रेण मणिकमवटे अवधाय—'आपो रेवतीः क्षयथाहिवस्वः

क्रतुं च भद्रं विभृथामृतं च। रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयोधात्' इत्यन्तेन मन्त्रेण 'आपो हि ष्ठा मयोभुवः' इत्याद्यृचेन च मणिके अप आसिञ्चति ब्राह्मणमेकं च भोजयेदिति मणिकावधानम्।

## मणिकावधानसूत्राणि पा० ३। ५

अथातो मणिकावधानम् ॥ १ ॥ उत्तरपूर्वस्यां दिशि यूपवद्वटं खात्वा कुशानास्तीर्याक्षतानरिष्टका ँ श्चान्यानि चाभिमङ्गलानि च तस्मिन् मिनोति मणिक ँ समुद्रोऽसीति॥२॥ अप आसिञ्चति आपो रेवतीः क्षयथाहिवस्वः क्रतुं च भद्रं विभृथामृतं च रायश्च स्थ स्वपत्यस्य पत्नी सरस्वती तद्गृणते वयोधादिति ॥३॥ आपो हि ष्ठेति च तिसृभिः ॥४॥ ततो ब्राह्मणभोजनम् ॥५॥



## श्रवणाकर्मप्रयोगः

तत्र श्रावण्यां पूर्णिमायां श्रवणाकर्म भवति। तस्य प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं विधाय, आवसथ्याग्नौ कर्म कुर्यात्। यथा—ब्रह्मोपवेशनादिप्राशनान्तेऽयं विशेषः—चरुस्थाल्यनन्तरं भर्जनकर्परम्, तत एकं कपालं तथा तण्डुलानन्तरं यवान्, ततस्तण्डुलपिष्टानि आसादयेत्। प्रोक्षणकाले यथासादितं प्रोक्षेत्।

उपकल्पयति च—दृषदुपले, शूर्पं, उदपात्रदर्व्यौ, कङ्कतत्रयम्, अञ्जनम्, अनुलेपनम्, स्रजश्चेति।

ततः पवित्रकरणादिप्रोक्षणीनिधानान्ते चरुदेशस्योत्तरतो भर्जनमधिश्रित्य तदुत्तरतः कपालमुपधाय, आज्यं

निरूप्य चरुपात्रे प्रणीतोदकासेचनपूर्वकं तण्डुलप्रक्षेपं कृत्वा, ब्रह्मद्वारा आज्यमधिश्रित्य, स्वयं चरुम्, अन्येन भर्जने यवान्, अपरेण एककपाले पुरोडाशमधिश्रित्य पुरोडाशं प्रथयित्वा, यावत्कपालं सर्वेषां पर्यग्निकरणं कुर्यात् ।

ततः स्रुवं संस्कृत्य, आज्यमुद्वास्य, चरुं चोद्वास्य, आज्यस्य उत्तरतः स्थापयित्वा, धाना उद्वास्य, चरोरुत्तरतो निधाय पुरोडाशमुद्वास्य धानानामुत्तरतः स्थापयेत् ।

तत आज्योत्पवनावेक्षणप्रोक्षण्युत्पवनानि कृत्वा, धानानां भूयसीर्धाना दृषदुपलाभ्यां पिष्ट्वा, अल्पाः पृथक् स्थापयित्वा, घृतेन सक्तूनकृत्वा, उपयमनकुशादानाद्याज्यभागान्तं कर्म कुर्यात् । तत आज्येन—'अपश्वेतपदा जहि पूर्वेण चापरेण च सप्त च वारुणीरिमाः प्रजाः सर्वाश्च राजबान्धवैः स्वाहा ॥' इति 'इदं श्वेतपदे' इति त्यागं विधाय,

'न वै श्वेतस्याध्याचारे हि ददर्श कश्चन श्वेताय वैदर्व्याय नमः स्वाहा ॥' इति मन्त्रेण द्वितीयामाहुतिं हुत्वा, इदं श्वेताय वैदर्व्याय इत्युक्त्वा, स्थालीपाकेन चतस्र आहुतीर्जुहोति । तद्यथा—

(१) विष्णवे स्वाहा । इदं विष्णवे । (२) श्रवणाय स्वाहा । इदं श्रवणाय । (३) श्रावण्यै पौर्णमास्यै स्वाहा ।

इदं श्रावण्यै पौर्णमास्यै । (४) वर्षाभ्यः स्वाहा । इदं वर्षाभ्यः । अथ धानावन्तं करम्भिणमित्यृचा धानानामेकाहुतिं हुत्वा इदमिन्द्रायेति त्यक्त्वा,

सक्तूनामाहुतित्रयं जुहुयात् । यथा—

(१) 'आग्नेयपाण्डुपार्थिवाना ँ सर्पाणामधिपतये स्वाहा ।' इदंशब्दयुक्तः स्वाहाकाररहितोऽयं मन्त्र एव त्यागस्त्रिषु ।

(२) 'श्वेतवाग्रवान्तरिक्षाणा ँ सर्पाणामधिपतये स्वाहा' ।

(३) 'अभिभूः सौर्यदिव्याना ँ सर्पाणामधिपतये स्वाहा' ॥ ततः—

'ध्रुवाय भौमाय स्वाहा'

इति सर्वं पुरोडाशं स्रुवे कृत्वा जुहुयात् । इदं ध्रुवाय भौमाय इति त्यक्त्वा, चरुधानासक्तुभ्य उत्तरतः किञ्चित्किञ्चिदादाय स्विष्टकृतं विधाय,

महाव्याहृतिहोमं संस्रवप्राशनं ब्रह्मणे दक्षिणादानान्तं कुर्यात् ।

## अथ बलिकर्म

अथ हुतशेषसक्तूनामेकदेशं शूर्पे प्रक्षिप्य, आदाय, उदपात्रम्, दर्वीम्, कङ्कतत्रयाञ्जनानुलेपनस्रजश्च शालाया

वहिर्निष्क्रम्य ब्रह्मणा उल्काधारेण सह स्वाङ्गणे हस्तमात्रं स्थण्डिलं स्वयमुपलिप्य, लौकिकाग्न्युल्कायां ध्रियमाणायां 'मान्तरामभत' इति प्रैषमुच्चार्य वाग्यतः स्थण्डिले उदपात्रमादाय,

(१) 'आग्नेयपाण्डुपार्थिवाना ँ सर्पाणामधिपतेऽवनेनिक्ष्व ।' इत्येकत्रावनेजनार्थं जलं दत्त्वा,

(२)'श्वेतवायवान्तरिक्षाणा ँ सर्पाणामधिपतेऽवनेनिक्ष्व ।' इति द्वितीयम् ।

(३) 'अभिभूः सौर्यदिव्याना ँ सर्पाणामधिपतेऽवनेनिक्ष्व ।' इति तृतीयं सर्पानवनेजयति ।

ततोऽवनेजनस्थानेषु अवनेजनक्रमेण एतैरेव मन्त्रैः 'एष ते वलिः' इत्यन्तैस्त्रिभिः प्रतिमन्त्रं वलिं हरति ।

ततः पूर्ववदवनेज्य कङ्कतत्रयेण 'प्रलिखस्व' इत्यन्तैरेतैरेव मन्त्रैः प्रतिवलिं प्रतिमन्त्रं प्रलिखति ।

ततः 'अङ्क्ष्व' इत्यन्तैरुक्तमन्त्रैः प्रतिवलिं प्रतिमन्त्रमञ्जनं ददाति ।

तथैव 'अनुलिम्पस्व' इत्यन्तैरनुलेपनम् ।

एवमेव 'स्रजो नह्यस्व' इति पुष्पमालां दत्त्वा, स्थण्डिले सक्तुशेषं क्षिप्त्वा, उदपात्रजलेन प्रसम्प्लाव्य,

(१) नमोस्तु सर्पेभ्यो ये के च पृथिवीमनु येऽन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥६॥ ( य० सं० १३ । ६ )

(२) याऽइषवो यातुधानानां या वा वनस्पतिरनु ॥ ये वा वटेषु शेरते तेभ्यः सर्पेभ्यो नमः ॥७॥ (य० सं० १३ । ७)

(३) ये वामी रोचने दिवो ये वा सूर्यस्य रश्मिषु ॥ येषामप्सु सदस्कृतन्तेभ्यः सर्पेभ्यो नमः ॥८॥ (य० सं० १३।८)

इति तिसृभिर्ऋग्भिः सर्पांस्तिष्ठन्नुपतिष्ठते ।

ततः स गृहपतिः एतावन्तं देशं सर्पा न प्रविशेयुरिति यावत्कामयेत तावन्तं देशं सन्ततोदकधारया त्रिःपरिषिञ्चयन् गृहं परीयात् 'अपश्वेतपदा जहि' इति पूर्वोक्तमन्त्राभ्यां सकृद् द्विस्तूष्णीम् ।

ततो दर्वीं शूर्पं च प्रक्षाल्य उल्कायां सकृत् प्रतप्य उल्काधारायां प्रयच्छति ।

अथ शालाद्वारि आपो हि ष्ठा इति तृचेन* ब्रह्मयजमानो-ल्काधारा मार्जयन्ते जलेनात्मानम् । ततो धानाः प्राश्नन्ति ब्रह्मयजमानोल्काधारा अनवखण्डयन्तः ततो ब्राह्मणभोजनम् एतावच्छ्रवणाकर्म ॥

---

* ऋचि त्रेरुत्तरपदादिलोपश्च छन्दसि ॥ ऋच्शब्दे परे त्रेः सम्प्रसारणमुत्तरपदादेर्लोपश्चेति वक्तव्यम् । तृचं सूक्तम् । (सिद्धान्तकौमुदी वैदिकप्रकरण अ० ६ )

## अथ प्रत्यहं बलिहरणप्रयोगः

सक्तुशेषं सुगुप्ते भाण्डे स्थापयित्वा ततः अस्तमिते सूर्ये सक्तुदर्वीकङ्कतत्रयं निधायोदपात्रं गृहीत्वा सोल्काधारः शालाया वहिरुपलेपनादि परिलेखनान्तं बलिहरणमनुदिनं पूर्ववत्कुर्यात् आग्रहायणीं यावत् । मान्तरागमतेति प्रैषाभावेऽपि कश्चिद् अन्तरा न गच्छेद् दर्वीमुखमेव प्रक्षालयेदिति अहरहर्बलिदानविधिः ।

## श्रवणाकर्मसूत्राणि पा० गृ० २, १४

अथातः श्रवणाकर्म ॥१॥ श्रावण्यां पौर्णमास्याम् ॥२॥ स्थालीपाकꣳश्रपयित्वाक्षतधानाश्चैककपालं पुरोडाशम् ॥३॥ धानानां भूयसीः पिष्ट्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति अपश्वेतपदा जहि पूर्वेण चापरेण च सप्त च वारुणीरिमाः प्रजाः सर्वाश्च प्रजा राजबान्धवैः स्वाहा ॥४॥ न वै श्वेतस्याभ्याचारे हि ददर्श कञ्चन श्वेताय वैदर्व्याय नमः स्वाहेति ॥५॥ स्थालीपाकस्य जुहोति विष्णवे श्रवणाय श्रावण्यै पौर्णमास्यै वर्षाभ्यश्चेति ॥६॥ धानावन्तमिति धानानाम् ॥७॥ घृताक्तान् सक्तून्सर्पेभ्यो जुहोति ॥८॥

आग्नेयपाण्डुपार्थिवानाꣳसर्पाणामधिपतये स्वाहा श्वेतवायवान्तरिक्षाणाꣳसर्पाणामधिपतये स्वाहा अभिभूः सौर्य-

दिव्यानाᳪं सर्पाणामधिपतये स्वाहेति ॥९॥ सर्वहुतमेककपालं ध्रुवाय भौमाय स्वाहेति ॥१०॥ प्राशनान्ते सक्तूनामेकदेशᳪं शूर्पे न्युप्योपनिष्क्रम्य बहिःशालायाः स्थण्डिलमुपलिप्योल्कायां ध्रियमाणायां मान्तरागमतेत्युक्त्वा वाग्यतः सर्पानवनेजयति ॥ ११ ॥ आग्नेयपाण्डुपार्थिवानाᳪं सर्पाणामधिपतेऽवनेनिक्ष्व श्वेतवायवान्तरिक्षाणाᳪं सर्पाणामधिपतेऽवनेनिक्ष्व अभिभूः सौर्यदिव्यानाᳪं सर्पाणामधिपतेऽवनेनिक्ष्वेति ॥ १२ ॥

यथावनिक्तं दर्व्योपघातᳪं सक्तून्सर्पेभ्यो बलिᳪं हरति ॥ १३ ॥ आग्नेयपाण्डुपार्थिवानाᳪं सर्पाणामधिपत एष ते बलिः, श्वेतवायवान्तरिक्षाणाᳪं सर्पाणामधिपत एष ते बलिः, अभिभूः सौर्यदिव्यानाᳪं सर्पाणामधिपत एष ते बलिरिति ॥१४॥ अवनेज्य पूर्ववत्कङ्कतैः प्रलिखति ॥१५॥

आग्नेयपाण्डुपार्थिवानाᳪं सर्पाणामधिपते प्रलिखस्व श्वेतवायवान्तरिक्षाणाᳪं सर्पाणामधिपते प्रलिखस्व अभिभूः सौर्यदिव्यानाᳪं सर्पाणामधिपते प्रलिखस्वेति ॥ १६ ॥ अञ्जनानुलेपनᳪं स्रजश्चाञ्जस्वानुलिम्पस्व स्रजोऽपिनह्यस्वेति ॥ १७ ॥ सक्तुशेषᳪं स्थण्डिले न्युप्योदपात्रेणोपनिनीयोपतिष्ठते नमोऽस्तु सर्पेभ्यः इति तिसृभिः ॥ १८ ॥

स यावत्कामयेत न सर्पा अभ्युपेयुरिति तावत्सन्ततयोदधारया निवेशनं त्रिः परिषिञ्चन् परीयादपश्वेतपदा जहीति द्वाभ्याम् ॥ १९ ॥ दर्वीं शूर्पं च प्रक्षाल्य प्रतप्य प्रयच्छति ॥ २० ॥ द्वारदेशे मार्जयन्त आपो हि ष्ठेति तिसृभिः ॥२१॥ अनुगुप्तमेतꣳसक्तुशेषं निधाय ततोऽस्तमितेऽग्निं परिचर्य दर्व्योपघातꣳ हरेदाग्रहायण्याः ॥ २२ ॥ तꣳ हरन्तं नान्तरेण गच्छेयुः ॥२३॥ दर्व्याचमनं प्रक्षाल्य निदधाति ॥२४॥ धानाः प्राश्नन्त्यसꣳस्यूताः ॥२५॥ ततो ब्राह्मणभोजनम् ॥२६॥



## अष्टकाकर्म

( १ ) आग्रहायण्याः पूर्णिमाया ऊर्ध्वं याश्चतस्रः कृष्णपक्षीया अष्टम्यो भवन्ति तासु क्रमशश्चत्वार्यष्टकाकर्माणि भवन्ति । तत्र पौषकृष्णाष्टम्यामैन्द्री ( इन्द्रदेवताका ) प्रथमाष्टका भवतिः तत्सम्बन्धादेव च परेद्युर्नवम्यामन्वष्टकापि भवति । एवमेव माघकृष्णाष्टम्यां वैश्वदेवी ( विश्वदेवदेवताका ) द्वितीयाष्टका भवतिः तत्सम्बन्धाच्चान्येद्युर्द्वितीयान्वष्टका भवति । एवं फाल्गुनकृष्णाष्टम्यां प्राजापत्या ( प्रजापतिदेवताका ) तृतीयाष्टकाः परेद्युश्च तदीयान्वष्टका भवति । एवमेव च चैत्रकृष्णाष्टम्यां पित्र्या ( पितृदेवताका ) चतुर्थी अष्टकाः अन्येद्युश्च तत्सम्बन्धिन्यन्वष्टका भवति नवम्याम् ।

( २ ) एतानि चाष्टकाकर्माणि सकृदेव भवन्ति न तु प्रतिवर्षम् ; संस्कारकर्मत्वात् । शास्त्रे चत्वारिंशत्संस्कारकर्माण्यभिहितानि, तेषां मध्ये येषामभ्यासः श्रूयते तान्येवासकृद्भवन्ति नेतराणि ।

( ३ ) अष्टकाशब्दः कर्मवचनोऽपि कालोपलक्षकस्तेनैतानि कर्माण्यष्टम्यामेव भवन्ति ।

## अष्टकाकर्मपद्धतिः

तत्र मार्गशीर्ष्या ऊर्ध्वं कृष्णाष्टम्यां मातृपूजापूर्वाभ्युदयिकं श्राद्धं विधाय आवसथ्याग्नौ कर्म कुर्यात् ।

केषाञ्चित् पक्षे अष्टकाकर्मसु आभ्युदयिकं नास्ति; 'नाष्टकासु भवेच्छ्राद्धम्' इति वचनात् ।

तत्र ब्रह्मोपवेशनादिप्राशनान्ते विशेषः—तण्डुलानन्तरं पूर्वमौपासनाग्निसिद्धस्यैवापूपस्यासादनम्, प्रोक्षणं च प्रोक्षणकाले । तत आज्यभागान्तं कृत्वा 'त्रिꣳशत्स्वसारः' इत्येवमाद्या दशाहुतीर्हुत्वा स्थालीपाकेन 'शान्ता पृथिवी०' इत्यादिभिश्चतुर्भिर्मन्त्रैश्चतस्र आहुतीर्हुत्वा अपूपात् 'इन्द्राय स्वाहा' इत्येकामाहुतिं दत्त्वा स्थालीपाकादपूपाच्च स्विष्टकृतं जुहोति तद्यथा—

आज्यभागानन्तरम्—

( १ ) 'त्रिꣳशत्स्वसार उपयन्ति निष्कृतिꣳसमानकेतुं

प्रतिमुञ्चमानाः, ऋतूꣳस्तन्वते कवयः प्रजानतीर्मध्ये छन्दसः परियन्ति भास्वतीः स्वाहा ॥' इदं स्वसृभ्यः ।

(२) 'ज्योतिष्मती प्रतिमुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि विपश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे स्वाहा ॥' इदं रात्र्यै ।

(३) 'एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन दस्यून्व्यसहन्त देवा हन्तासुराणामभवच्छचीभिः स्वाहा ॥' इदमष्टकायै ।

(४) 'अनानुजा मनुजमामकर्तः सत्यं वदन्त्यन्विच्छ्ये तत्, भूयासमस्य सुमतौ यथा यूयमन्यावो अन्यामतिमाप्रयुक्तः स्वाहा ॥' इदं रात्रिभ्यः ।

(५) 'अभून्मम सुमतौ विश्ववेदा आष्टप्रतिष्ठामविदद्धि गाधं भूयासमस्य सुमतौ यथा यूयमन्यावो अन्यामतिमाप्रयुक्तः स्वाहा ॥' इदं रात्रिभ्यः ।

(६) 'पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवो नु पञ्च । पञ्च दिशः पञ्चदशेन क्लप्ताः समानमूर्ध्नीरधिलोकमेकꣳस्वाहा ॥' इदं रात्रिभ्यः ।

(७) 'ऋतस्य गर्भः प्रथमा व्यूषुष्यपामेका महिमानं बिभर्त्ति सूर्यस्यैकाचरति निष्कृतेषु धर्मस्यैकाचरति

निष्कृतेषु धर्मस्यैका सवितैकां नियच्छतु स्वाहा ॥' इदं रात्र्यै ।

(८) 'या प्रथमा व्यौच्छत्सा धेनुरभवद्यमे सा नः पयस्वती धुक्ष्वोत्तरामुत्तरासमाᳪ स्वाहा ॥' इदं रात्र्यै ।

(९) 'शुक्र ऋषभा नभसा ज्योतिषागाद्विश्वरूपा शबलीरग्निकेतुः । समानमर्थᳪस्वपस्यमाना बिभ्रती जरामजर उष आगात्स्वाहा ॥' इदं रात्र्यै ।

(१०) 'ऋतूनां पत्नी प्रथमेयमागादह्नां नेत्री जनित्री प्रजानामेका सती । बहुधोषौ व्यौच्छत्सा जीर्णा त्वं जरयसि सर्वमन्यात्स्वाहा ॥' इदं रात्र्यै ।

अथ स्थालीपाकेन चतस्र आहुतयः—'शान्ता पृथिवी' इत्यादिभिर्मन्त्रैः प्रतिमन्त्रं जुहोति । तद्यथा—

(१) 'शान्ता पृथिवी शिवमन्तरिक्षᳪशन्नो द्यौरभयं कृणोतु । शन्नो दिशः प्रदिश आदिशो नोऽहोरात्रे कृणुतं दीर्घमायुर्व्यश्नवै स्वाहा ॥' इदं पृथिव्या अन्तरिक्षाय दिवे दिग्भ्यः प्रदिग्भ्यो आदिग्भ्योऽहोरात्राभ्यां च ।

(२) 'आपो मरीचीः परिपान्तु सर्वतो धाता समुद्रो अपहन्तु पापम् । भूतं भविष्यदकृतद् विश्वमस्तु मे ब्रह्माऽभिगुप्तः सुरक्षितः स्याᳪस्वाहा ॥' इदमद्भ्यो मरीचिभ्यो धात्रे समुद्राय ब्रह्मणे च ।

(३) 'विश्वे आदित्या वसवश्च देवा रुद्रा गोप्तारो मरुतश्च सन्तु । ऊर्जं प्रजाममृतं दीर्घमायुः प्रजापतिर्मयि परमेष्ठी दधातु नः स्वाहा ॥' इदं विश्वेभ्य आदित्येभ्यो वसुभ्यो देवेभ्यो रुद्रेभ्यो मरुद्भ्यः प्रजापतये परमेष्ठिने च ।

(४) 'अष्टकायै स्वाहा' इदमष्टकायै ।

अथ अपूपादेकाहुतिः—'इन्द्राय स्वाहा ॥' इदमिन्द्राय ।

स्थालीपाकादपूपाच्च स्विष्टकृत् । ततो महाव्याहृत्यादिप्राजापत्यान्तं होमं विधाय प्राशनादि समापयेत् ।



# प्रथमान्वष्टकापद्धतिः

( पा. गृ. कां. ३ कं. ३ हरिहरभाष्ये )

यथा अष्टकाकर्माणि चत्वारि भवन्ति सकृच्च संस्कार-कर्मत्वात्; तथा अन्वष्टका अपि चतस्र एव भवन्ति सकृच्च, अष्टकाकर्मसहचारित्वात्तदनन्तरभावित्वाच्च ।

किं च कृष्णादिगणनापक्षेण पौषकृष्णाष्टम्यां प्रथमाष्टका तथा तद्द्वितीयदिने पौषकृष्णनवम्यां प्रथमान्वष्टका । एवं माघकृष्णाष्टम्यां द्वितीयाष्टका तदनु माघकृष्णनवम्यां द्वितीया-न्वष्टका । फाल्गुनकृष्णाष्टम्यां तृतीयाष्टका, तथा फाल्गुन-कृष्णनवम्यां तृतीयान्वष्टका । एवमेव आश्विनकृष्णाष्टम्यां चतुर्थ्यष्टका, तदनु आश्विनकृष्णनवम्यां चतुर्थ्यन्वष्टका भवतीति ।

एवं पिण्डपितृयज्ञवदित्यतिदेशान्नित्यवैश्वदेवानन्तरमपराह्णे प्राचीनावीती नीवीग्रन्थनं कृत्वा दक्षिणामुखः परिवेष्टितेऽग्निसमीपे अग्नेरुत्तरत उपविश्य आग्नेयादिदक्षिणान्तमग्रदक्षिणमग्निं दक्षिणाग्रैः कुशैः परिस्तीर्य अग्नेः पश्चिमतो दक्षिणसंस्थानि पात्राण्येकैकश आसादयति। तद्यथा स्रुवं चरुस्थालीं वा स्रुक्पक्षे तु स्रुगनन्तरं चरुस्थालीमुदकम् आज्यं मेक्षणं स्फ्यम् उदपात्रम् सकृदाच्छिन्नानि ( ) शाकम्, ( ) दुग्धम्, सक्तून्, अञ्जनम्, अनुलेपनम्, स्रजः, सूत्राणि च। ततः शाकमग्नौ अधिश्रयेत्। शृतं शाकमासादितेन घृतेनाभिघार्य दक्षिणत उद्वास्य पूर्वेणाग्निमानीयोत्तरतः स्थापयेत्। ततः सव्यं जान्वाच्य मेक्षणेन शाकमादाय—

( १ ) 'अग्नये कव्यवाहनाय स्वाहा' इत्येकामाहुतिं हुत्वा इदमग्नये कव्यवाहनायेति त्यागं विधाय पुनर्मेक्षणेन शाकमादाय—

( २ ) 'सोमाय पितृमते स्वाहा' इति द्वितीयामाहुतिं हुत्वा 'इदं सोमाय पितृमते' इति त्यागं विधाय मेक्षणमग्नौ प्रास्य—

अग्नेर्दक्षिणतः पश्चाद्वा दक्षिणामुख उपविश्य सव्यं जान्वाच्य भूमिमुपलिप्य तत्र स्फ्येन 'अपहता असुरा रक्षा-

ऽसि वेदिषदः' इति मन्त्रेण लेखां दक्षिणसंस्थामुल्लिख्य तथैव द्वितीयाम्, उदकमुपस्पृश्य 'ये रूपाणि' इति मन्त्रेण उल्मुकं प्रथमलेखाग्रे निधाय तथैव द्वितीयलेखाग्रे निधाय उदकमुपस्पृश्य उदकपात्रमादाय प्रथमलेखायां पितृतीर्थेन—

'अमुकगोत्र ! ( अमुकसगोत्र ! ) अस्मत्पितः ! अमुकशर्मन् ! अवनेनिक्ष्व' इत्येवं पितामहप्रपितामहयोरप्यवनेजनं दत्त्वा द्वितीयलेखायामेवम्—

'अमुकसगोत्रे ! अस्मन्मातः ! अमुकि देवि ! अवनेनिक्ष्व' इत्येवं पितामहीप्रपितामह्योरप्यवनेजनं दत्त्वा सकृदुपमूललूनानि दक्षिणाग्राणि बर्हींषि लेखयोरास्तीर्य तत्रावनेजनक्रमेण—

'अमुकसगोत्र ! अस्मत्पितः ! अमुकशर्मन् ! एतत्ते शाकं स्वधा नमः' इति शाकपिण्डं दत्त्वा पितामहप्रपितामहयोश्चैवं प्रदाय, अपरलेखायाम्—

'अमुकसगोत्रे ! अस्मन्मातः ! अमुकि देवि ! एतत्ते शाकं स्वधा नमः' इति शाकपिण्डं दत्त्वा पितामहीप्रपितामह्योरप्येवं पिण्डद्वयं प्रदाय प्रतिपिण्डदानम्—इदं पित्रे, इदं पितामहाय, इदं प्रपितामहाय, इदं मात्रे, इदं पितामह्यै, इदं प्रपितामह्यै; इति त्यागान् विधाय इच्छया स्त्रीपिण्डसमीपे अवनेजनसकृदाच्छिन्नास्तरणपूर्वकमनपत्येभ्य आचार्यान्तेवासि-

भ्यश्च यथाक्रमं शाकपिण्डान् दद्यात् । चकारादन्येभ्योऽपि सपिण्डादिभ्यो दद्यात् ।

स्त्रीपिण्डसन्निधौ अवटत्रयं खात्वा तेषु—

'अमुकसगोत्रे ! अस्मन्मातः ! अमुकि देवि ! दुग्धं पिब' इत्येकत्रावटे दुग्धं प्रसिच्य, तथैव पितामहीप्रपितामह्योरितरयोरवटयोरासिच्य सक्तूनादाय—'अमुकसगोत्रे ! अमुकि देवि ! तृप्यस्व' इति मातृप्रभृतिभ्यः सक्तून्प्रत्यवटं प्रक्षिप्य ततस्तथैव 'अङ्क्ष्व' इति मातृप्रभृतिभ्योऽञ्जनं दत्त्वा 'अनुलिम्पस्व' इत्यनुलेपनं च दत्त्वा 'स्रजोऽपिनह्यस्व' इति स्रजो दत्त्वा 'अत्र पितरो मादयध्वम्' इत्यर्द्धर्चं जपित्वा पराङ् आवृत्य वायुं धारयन् आतमनादुदङ्मुख आसित्वा तेनैवावृत्य 'अमीमदन्त' इत्यर्द्धर्चं जपित्वा पूर्ववदवनेज्य नीवीं विस्रस्य 'नमो वः' इति प्रतिमन्त्रमञ्जलिं करोति 'गृहान्नः' इत्याशिषः प्रार्थ्य 'एतद्वः पितरो वासः' इति प्रतिपिण्डं सूत्राणि दत्त्वा 'ऊर्जं वहन्तीरमृतं घृतं पयः' इति पिण्डेष्वपो निषिच्य पिण्डानुत्थाप्य उखायामवधाय अवघ्राय सकृदाच्छिन्नान्यग्नौ प्रास्य उल्मुकं प्रक्षिप्य उदकं स्पृष्ट्वा आचम्य आन्वष्टक्यं श्राद्धं कुर्यात् ।

इति प्रथमाष्टकान्वष्टका च ॥



## द्वितीयाष्टकापद्धतिः

पौष्या ऊर्ध्वं कृष्णाष्टम्यां द्वितीयाष्टका वैश्वदेवी। तत्र प्रथमप्रयोगे मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा आवसथ्याग्नौ कर्म कुर्यात्। तत्र ब्रह्मोपवेशनं प्रणीताप्रणयनम्, परिस्तरणं च विधाय पात्राण्यासादयेत्। पवित्रच्छेदनानि, पवित्रे द्वे, प्रोक्षणीपात्रम्, आज्यस्थाली, द्वे चरुस्थाल्यौ, सम्मार्जनकुशाः, उपयमनकुशाः, समिधः, स्रुवः, आज्यम्, अष्टकाचरुतण्डुलाः, शाकीयचरुतण्डुलाः, पूर्वमेव औपासनसिद्धं शाकम्, अथोपकल्पनीयानि उपकल्पयन्ति। हिरण्यशकलानि षट्। इति।

ततः पवित्रकरणादिप्रोक्षणान्ते विशेषः। 'विश्वेभ्यस्त्वा देवेभ्यो जुष्टं प्रोक्षामि' इति शाकीयचरुतण्डुलानां प्रोक्षणम्। आज्यनिर्वापानन्तरमष्टकाचरुपात्रे तण्डुलान् प्रक्षिप्य शाकीय-चरुपात्रे तण्डुलप्रक्षेपं कुर्यात्। ततो ब्रह्माज्यम्, स्वयम् (यज-मानः) अष्टकाचरुम्, अन्यः पत्नी वा शाकीयचरुं युग-पदग्नौ उदक्संस्थमधिश्रयन्ति। ततः पर्यग्निकरणादि प्रोक्षण्युत्पवनान्तं यजमान एव कुर्यात्।

अथ यजमानः स्वासने उपविश्य उपयमनकुशानादाय समिधोऽभ्याधाय पर्युक्ष्य ब्रह्मणान्वारब्ध आघारौ हुत्वा अग्नेरुल्मुकमादाय उत्थाय प्रदक्षिणं परिगच्छन् शाकञ्च आज्यम्' 'अग्निं त्रिः पर्यग्नि कृत्वा उल्मुकमग्नौ प्रास्य तावत् प्रतिपरीत्य अप्रादक्षिण्येनागत्य यजमानः पूर्णाहुति-वदाज्यं संस्कृत्य ब्रह्मणानन्वारब्धः 'स्वाहा देवेभ्यः' इत्ये-कामाहुतिं हुत्वा 'इदं देवेभ्यः' इति त्यक्त्वा 'देवेभ्यः स्वाहा' इति तेनैवाज्येन द्वितीयामाहुतिं हुत्वा 'इदं देवेभ्यः' इति त्यक्त्वा अपराः पञ्चाहुतीस्तूष्णीं जुहोति 'इदं प्रजापतये' इति त्यागः पञ्चसु। ततो ब्रह्मान्वारब्ध आज्यभागौ हुत्वा 'त्रिꣳशत्स्वसारः' इति दशाहुतीरनन्वारब्धो हुत्वा अष्टका-चरुणा 'शान्ता पृथिवी०' इत्यादिभिश्चतुर्भिर्मन्त्रैश्चतस्र आहु-तीर्हुत्वा शाकहोमाय वामहस्तस्थे स्रुवे आज्यमुपस्तीर्य

हिरण्यशकलमवधाय शाकं द्विधावदाय गृहीत्वा पुनर्हिरण्यशकलमवधाय द्विरभिघार्य 'वह वपां जातवेदः पितृभ्यः' इति प्राचीनावीतिनो दक्षिणामुखस्य शाकहोमः । 'इदं पितृभ्यः' इति त्यागः । 'इदं जातवेदसे' इति वा त्यक्त्वा यज्ञोपवीती भूत्वा उदकं स्पृष्ट्वा अथ प्रधानहोमार्थं स्रुवे आज्यमुपस्तीर्य हिरण्यशकलमवधार्य शाकाद् द्विरवदाय स्रुवे क्षिप्त्वा स्थालीपाकाच्च सकृदवदाय उपरि क्षिप्त्वा तदुपरि हिरण्यशकलं दत्त्वा सकृदभिघार्य 'विश्वेभ्यो देवेभ्यः स्वाहा' इति जुहुयात् । 'इदं विश्वेभ्यो देवेभ्यः' इति त्यक्त्वा स्विष्टकृदर्थं स्रुवमुपस्तीर्य हिरण्यशकलं दत्त्वा शाकाद् द्विरवदाय स्रुवे कृत्वा चरुद्वयाच्च सकृत्सकृदवदाय हिरण्यशकलमवधार्य द्विरभिघार्य 'अग्नये स्विष्टकृते स्वाहा' इति जुहुयात् । 'इदमग्नये स्विष्टकृते' इति त्यागः ।

ततो महाव्याहृत्यादिप्राजापत्यान्ता नवाज्याहुतीर्हुत्वा ( ब्रह्मान्वारब्धो हुत्वा ) संस्रवं प्राश्य ब्रह्मणे शाकदक्षिणां दद्यात् । ततः स्मृत्यन्तरोक्तपञ्चविंशतिब्राह्मणभोजनं च दद्यात् ।

## अथ द्वितीयान्वष्टका

अस्यैव शाकस्यावशेषादपरदिनेऽन्वष्टकाकर्म पूर्ववत् ।



## अथ तृतीयाष्टका

माघ्या ऊर्ध्वं कृष्णाष्टम्यां तृतीयाष्टका प्राजापत्या, सा यथा प्रथमाष्टका। तत्र अपूपस्थाने कालशाकचरुं तदग्निसिद्धमेव आसादनकाले आसाद्य प्रोक्षणकाले प्रोक्षयेत्। ततोऽपूपयागस्थाने 'प्रजापतये स्वाहा' इति कालशाकं जुहुयात्। शेषं समानम्। कालशाकालाभे वास्तुकम्।

## अथ तृतीयान्वष्टका

अन्येद्युः पूर्ववदन्वष्टकाकर्म। इति ॥



## अथ चतुर्थ्यष्टका

प्रौष्ठपद्या ऊर्ध्वं कृष्णाष्टम्यां चतुर्थी पित्र्या शाकाष्टका। सा च प्रथमाष्टकावत्। एतावान् विशेषः। चरुस्थालीद्वयम्, तण्डुलानन्तरं कालशाकमासादयेत्। कालशाकचरुसम्बद्धमासादनादि होमान्तं कर्म प्राचीनावीती दक्षिणाभिमुखः कुर्यात्। अन्यद्यज्ञोपवीती पूर्वाभिमुखः कालशाकचरुसम्बद्धं कर्म कृत्वा उदकमुपस्पृशेत्। अपूपहोमस्थाने 'पितृभ्यः स्वाहा' इति शाकचरोरेकामाहुतिं जुहुयात्। इति।

## चतुर्थ्यन्वष्टका

प्रातरन्वष्टकाकर्म पूर्ववत्। इति ॥



## पृष्ठोदिविविधानम्

अथातो धर्मजिज्ञासा । केशान्तादूर्ध्वमपत्नीक उच्छिन्नाग्निरनग्निको वाप्रवासी ब्रह्मचारी चान्वग्निरिति ग्रामादग्निमाहृत्य पृष्टो दिवीत्यधिष्ठाप्य समित्तमिति द्वाभ्यामुपस्थानं व्याहृतिभिस्त्रिभिश्च सावित्रैः ( सावित्र्या ) प्रज्वाल्य तां सवितुस्तत्सवितुर्विश्वानि देव सवितरिति पुनस्त्वेति समिन्ध्य पूर्ववदक्षतैर्हुत्वा पाकं पचेत्तत्र वैश्वदेवं कुर्याद्ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृते, इत्युपस्पृश्य पूर्ववद्बलिकर्म, नैवं कृते वृथा पाको भवति । न वृथा पाकं पचेन्न वृथा पाकमश्नीयादत्र पिण्डपितृयज्ञपक्षाद्याग्रयणानि कुर्यात् ॥ इति कात्यायनोक्तं पृष्ठोदिविविधानपरिशिष्टम् ॥

## अथ मन्त्राणां पाठः

तत्र तावदग्न्याहरणमन्त्रः—(१) अन्वग्निरुषसामग्रमक्ख्यदन्वहानि प्रथमो जातवेदाः। अनुसूर्य्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवीऽआततन्थ॥ यजु० सं० ११। १७॥

अग्निस्थापनमन्त्रः—(२) पृष्टो दिवि पृष्टोअग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश॥ व्वैश्वानरः सहसा पृष्टोअग्निः स नो दिवासरिषस्पातु नक्तम्॥ यजु० सं० १८। ७३॥

अग्नेरुपस्थानमन्त्रौ—(३-४) समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम्। आस्मिन्हव्या जुहोतन॥ (यजु० सं० ३। १)॥ तं त्वा समिद्भिरङ्गिरो घृतेन वर्द्धयामसि। बृहच्छोचायविष्ठ्य॥ (य० सं० ३। ३)

प्रज्वालनमन्त्राः—ओं भूर्भुवः स्वः। (इति व्याहृतयः) अथ तिस्रः सावित्र्यः—(१) ताᳪ सवितुर्वरेण्यस्य चित्रामाहं व्वृणे सुमतिं व्विश्वजन्याम्। यामस्य कण्वोऽअदुहत् प्रपीनाᳪसहस्रधाराम्पयसा महीं गाम् (य० सं० १७। ७४)॥ (२) तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्॥ (य० सं० ३०। २)॥ विश्वानि देव सवितर्दुरितानि

परासुव । यद्भद्रं तन्नऽआसुव ॥ ( य० सं० ३० । ३ ) ॥
अथाग्नेः समिन्धनम्—पुनस्त्वादित्या रुद्रा व्वसवः समिन्धताम्पुनर्ब्ब्रह्माणो व्वसुनीथयज्ञैः । घृतेन त्वन्तन्न्वं व्वर्द्धयस्व सत्त्याः सन्तु यजमानस्य कामाः ॥ ( य० सं० १२ । ४४ ) ॥
एवमग्निसम्पत्तिं कृत्वा निरग्निना प्रतिदिनं होमादिकं कार्यम् ।

अत्र हरिहरभाष्यम् । पा० गृ० सू० कां० ३ कं० १६। “अथ पृष्ठोदिविविधानम् । अथ परिशिष्टोक्तं पृष्ठोदिविविधानं वक्ष्यामि । केशान्तादूर्द्ध्वमपत्नीक उत्सन्नाग्निर्निरग्निकोऽप्रवासी ब्रह्मचारी वा मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा अन्वग्निरित्यनयर्चाग्निमाहृत्य पञ्चभूसंस्कारान्कृत्वा पृष्ठो दिवि पृष्ठो अग्निः पृथिव्यामित्यनयर्चाग्नेः स्थापनं व्याहृतिभिः ताँ सवितुस्तत्सवितुर्विश्वानि देव सवितरित्येताभिः तिसृभिः सावित्रीभिः प्रज्वालनमग्नेः, अथ तस्मिन्नग्नौ अक्षतहोमपञ्चमहायज्ञपिण्डपितृयज्ञपक्षाद्याग्रयणादि कुर्यात् पूर्ववद्गृह्योक्तं पृष्ठोदिविविधानम्”॥ इति॥



# नवान्नप्राशनपद्धतिः

( पा० गृ० कां० ३ कं० १ ).

तत्र शरदि वसन्ते च अनाहिताग्नेर्नवान्नप्राशनं कर्म भवति। प्रथमप्रयोगे मातृकापूजाभ्युदयिके विदध्यात् । आवसथ्याग्नौ ब्रह्मोपवेशनादिप्राशनान्ते विशेषः—नवं स्थालीपाकं श्रपयित्वाज्यभागानन्तरम् आज्याहुतिद्वयं जुहोति । यथा—

( १ ) 'शतायुधाय शतवीर्याय शतोतये अभिमातिषाहे शतं यो नः शरदो जीजानिन्द्रो नेषदति दुरितानि विश्वा स्वाहा ॥' इदमिन्द्राय ।

( २ ) 'ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति तेषां योज्यानिमजीजिमावहात्तस्मै नो देवाः परिधत्तेह सर्वे स्वाहा ॥' इदᳫं सर्वेभ्यो देवेभ्यः ।

इन्द्राग्नी विश्वे देवा द्यावापृथिवी स्थालीपाकेनाग्रयणदेवताः।

( १ ) 'इन्द्राग्निभ्याᳫं स्वाहा ।' इदमिन्द्राग्निभ्याम् ।

( २ ) (उपांशु—) 'विश्वेभ्यो देवेभ्यः स्वाहा ।' इदं विश्वेभ्यो देवेभ्यः ।

( ३ ) (उपांशु—) 'द्यावापृथिवीभ्याᳫं स्वाहा ।' इदं द्यावापृथिवीभ्याम् । इति तिस्र आहुतीर्हुत्वा,

'स्विष्टमग्ने अभितत् प्रणीहि विश्वांश्च देवः पृतना अभिष्यक्। सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मद्धेह्यजरं न आयुः स्वाहा' इत्यनेन मन्त्रेण आज्याहुतिं जुहोति। इदमग्नये।

ततः स्थालीपाकात्—'अग्नये स्विष्टकृते स्वाहा' इदमग्नये स्विष्टकृते, इति हुत्वा, पुनः 'स्विष्टमग्ने०' इत्यादिनाज्याहुतिं जुहोति। इदमग्नये, इति त्यागः।

ततो महाव्याहृत्यादिप्राजापत्यहोमान्तं कृत्वा—

'अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः भद्रान्नः श्रेयः समनैष्ट देवास्त्वया वशेन समशीमहि त्वा स नो मयो भूः पितो आविशस्व शन्तोकाय तन्वै स्योने।' इत्यनेन मन्त्रेण संस्रवं प्राश्नाति।

यवान्नप्राशने तु—'एतमुत्यं मधुना संयुतं यवꣳसरस्वत्या अधिवनाय चक्रुषुः, इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन् मरुतः सुदानवः।' इत्यनेन यवसंस्रवं प्राश्नाति। ततो ब्राह्मणभोजनम्॥

इति नवान्नप्राशनपद्धतिः॥



## आग्रहायणीकर्मप्रयोगः

( पा० गृ० कां० ३ कं० २ )

मार्गशीर्ष्यां पौर्णमास्यामाग्रहायणीकर्म भवति । तत्र प्रथमारम्भे मातृपूजाभ्युदयिके विधाय आवसथ्याग्नौ ब्रह्मोपवेशनादिप्राशनान्ते विशेषः ।

'शूर्पं सक्तून् उल्काम् उदपात्रं दर्वीं कङ्कतत्रयम् अञ्जनम् उपलेपनं स्रजश्च'—

इत्युपकल्प्य आज्यभागानन्तरम् 'अपश्वेतपदा जहि' इत्याज्याहुतिद्वयं श्रवणाकर्मवद्धुत्वा अपराश्चतस्र आहुतीर्जुहोति वक्ष्यमाणैश्चतुर्भिर्मन्त्रैः प्रतिमन्त्रम् । यथा तावद्द्वे आहुती—

(१) 'अपश्वेतपदा जहि पूर्वेण चापरेण च सप्त च वारुणी-रिमाः प्रजाः सर्वाश्च राजबान्धवैः स्वाहा ॥' इति मन्त्रेण आज्याहुतिं हुत्वा 'इदं श्वेतपदे' इति त्यागः ।

(२) 'न वै श्वेतस्याध्याचारे हि ददर्श कश्चन श्वेताय वैदर्व्याय नमः स्वाहा' इति मन्त्रेण आज्याहुतिं हुत्वा 'इदं श्वेताय वैदर्व्याय' इति त्यागः ।

अथ चतस्र आज्याहुतयः—

(१) 'यां जनाः प्रतिनन्दन्ति रात्रीं धेनुमिवायतीम् । संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा ॥' इदꣳ रात्र्यै० ॥

(२) 'संवत्सरस्य प्रतिमा या ताꣳ रात्रीमुपास्महे । प्रजाꣳ सुवीर्यां कृत्वा दीर्घमायुर्व्यश्नवै स्वाहा ॥' इदꣳ रात्र्यै० ॥

(३) 'संवत्सराय परिवत्सरायेडावत्सरायेद्वत्सराय वत्स-राय कृणुते बृहन्नमः तेषां वयः सुमतौ यज्ञियानां ज्योग्जीता अहताः स्याम स्वाहा ॥' इदꣳ संवत्सराय परिवत्सरायेडावत्सरायेद्वत्सराय वत्सराय च ॥

(४) 'ग्रीष्मो हेमन्त उत नो वसन्तः शिवा वर्षा अभया शरन्नः । तेषामृतूनाꣳ शतशारदानान्निवात येषामभये

वसेम स्वाहा ॥' इदं ग्रीष्माय हेमन्ताय वसन्ताय वर्षाभ्यः शरदे च० ॥

ततः स्थालीपाकेन चतस्र आहुतीर्जुहोति । तद्यथा— (१) 'सोमाय स्वाहा' इदं सोमाय० ॥ (२) 'मृगशिरसे स्वाहा इदं मृगशिरसे० ॥ (३) 'मार्गशीर्ष्यै पौर्णमास्यै स्वाहा' इदं मार्गशीर्ष्यै पौर्णमास्यै०॥ (४) 'हेमन्ताय स्वाहा' इदं हेमन्ताय० ॥

ततः स्थालीपाकेन स्विष्टकृतं हुत्वा महाव्याहृत्यादि-दक्षिणादानान्ते सक्तुशेषं शूर्पे न्युप्योपनिष्क्रमणप्रभृतिमार्जन-पर्यन्तं श्रवणाकर्मवत् कृत्वा मार्जनान्ते 'उत्सृष्टो बलिः' इत्युच्चैर्ब्रूयात् ।

ततस्तां रात्रीं वत्सान् स्वमातृभिः सह संसृजेत् ।

॥ इत्याग्रहायणीकर्म ॥



# स्रस्तरारोहणकर्म

तत्र प्रथमप्रयोगे मातृपूजाभ्युदयिके विधाय स्रस्तरास्तरणप्रदेशगृहे सर्वमावसथ्याग्निं नीत्वा पञ्चभूसंस्कारपूर्वकं स्थापयित्वा अग्नेः पश्चिमायां दिशि कुशैः स्रस्तरास्तरणं कुर्यात्। स्रस्तरस्य स्तरणं अग्निशालाया गृहान्तरं युज्यते, अग्निशालायामौपवसथ्यरात्रिमन्तरेण शयननिषेधात् तस्योपरि नूतनं सकृत्प्रक्षालितम् उदग्दशं वासः संस्तरेत्, अग्निं दक्षिणेन ब्रह्माणमुपवेश्य उत्तरत उदपात्रं शमीशाखां सीतालोष्टम् अश्मानञ्च निधाय स्रस्तरपश्चिमतः स्वामी स्थित्वा तमुत्तरेण पत्नी, तामुत्तरेणापत्यानि यथाकनिष्ठं तत्र गृहपतिरग्निमीक्षमाणो जपति।

'अयमग्निर्वीरतमोऽयं भगवत्तमः सहस्रसातमः। सुवीर्योऽयᳲश्रैष्ठ्ये दधातु नौ' इत्येतं मन्त्रम्। ततः पश्चादग्नेः प्राञ्चमञ्जलिं करोति।

(१) 'दैवीं नावᳲ स्वरित्रामनागसमस्रवन्तीमारुहेमाᳲ स्वस्तये० ॥'

(२) 'सुनावमारुहेयमस्रवन्तीमनागसं शतारित्राᳲ स्वस्तये ॥'

(३) 'आनो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्। मद्ध्वा रजाᳲसि सुक्रतू ॥'

इति तिसृभिर्ऋग्भिः । ततो 'ब्रह्मन् प्रत्यवरोहामि' इति ब्रह्माणमामन्त्र्य 'प्रत्यवरोहध्वम्' इति ब्रह्मणा प्रत्यनुज्ञाताः सर्वे स्नाता अहतवाससः—'आयुः कीर्तिर्यशोबलमन्नाद्यं प्रजाम्' इत्यनेन मन्त्रेण स्रस्तरमारोहयन्त्यधितिष्ठन्ति स्त्रियोऽपि मन्त्रेण ।

तमारुह्य तेषु ये उपनीतास्ते—

'सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिधीयतान्नः । शिवा नो वर्षाः सन्तु शरदः सन्तु शिवाः' इत्यमुं मन्त्रं जपन्ति ।

अथ—'स्योना पृथिवि नो भवानृक्षरानिवेशनीयच्छानः शर्मसप्रथाः' इत्यनया ऋचा स्वामिप्रभृतयः स्त्रिय उपनीता अनुपनीताश्च सर्वे यथोक्तक्रमेण दक्षिणपार्श्वैः प्राक्शिरसः संविशन्ति स्वपन्ति । ततः—'उदायुषा स्वायुषोत्पर्जन्यस्य वृष्ट्या पृथिव्याः सप्तधामभिः' इत्यनेन मन्त्रेणोत्तिष्ठन्ति सर्वे ततः स्रस्तरादुत्तीर्य ब्रह्मानुमन्त्रणप्रत्यवरोहणोपेतजपसंवेशनो-त्थानानि वारद्वयमेव कुर्युः । तत आरभ्य चतुरो मासान् सर्वे अधः शयीरन् । कामतो वा शय्यायाम् । पुनरावसथ्यं पञ्च-भूसंस्कारपूर्वकं स्वस्थाने स्थापयेत् ।

॥ इति स्रस्तरारोहणकर्म ॥



# स्वाध्यायविधिः

( सन्ध्योपासनानन्तरम् )

'उपविशेत्—दर्भेषु दर्भपाणिः स्वाध्यायञ्च यथाशक्त्या-दावारभ्य वेदम्' ॥ २ ॥ (पा० गृ० त्रिकण्डिकासूत्रम् )

हरिहरभाष्यम् । 'अथ ब्रह्मयज्ञं कुर्यात् । आसनोपरि न्यस्तेषु प्रागग्रेषु दर्भेषु प्राङ्मुख उपविष्टः पाणिभ्यां दर्भानादाय इषेत्वेत्यादिकस्य खं ब्रह्मान्तस्य माध्यन्दिनीयस्य वाजसनेयकस्य यजुर्वेदाम्नायस्य विवस्वानृषिः वायुर्देवता गायत्र्यादीनि सर्वाणिच्छन्दांसि ब्रह्मयज्ञे विनियोगः— इत्यभिधाय प्रणवं व्याहृतीर्गायत्रीमाम्नायस्वरेणाधीत्य इषेत्वोर्जेत्वेत्यादितो वेदमारभ्यानुवाकशोऽध्यायशो यजुःशो वा संहितां ब्राह्मणं चाध्यायशो ब्राह्मणशो वा प्रणवावसानं यथाशक्ति प्रत्यहमधीयानो मन्त्रं ब्राह्मणं च समाप्य पुनरेवमेवारभ्य समापयेत् । प्रणवव्याहृतिगायत्रीपूर्वकन्तु प्रतिदिनं पठेत् । एवमितिहासपुराणादीन्यपि ब्रह्मयज्ञसिद्धये जपेत् । 'तत्राप्याध्यात्मिकीं जपेत्' इति योगीश्वरेण पृथगभिधानात् । अत्रानध्यायो नास्ति । 'नास्ति नित्येष्वनध्यायः' इति मनुवचनात् । नित्यश्च ब्रह्मयज्ञः ॥

॥ इति ब्रह्मयज्ञविधिः ॥

॥ ( स्वाध्यायविधिः ) ॥



# मातृपूजाप्रयोगः

सर्वकर्मसु प्रथमकर्तव्यो मातृपूजाविधिः । प्रातःकाले स्नातः कृतनित्यक्रियः कुड्ये फलके वा स्थापितरक्षिकासप्तदशतये गणपतिसहितषोडशमातॄः मृत्तिकामयीं श्रियं तदभावे तामपि रक्षिकायां पूजयेत् ॥

तत्र मातरश्च—

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
हृष्टिः पुष्टिस्तथा तुष्टिस्तथात्मकुलदेवता ।
गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश ॥

तत्र क्रमः । आचम्य प्राङ्मुख उपविश्य प्रथमरक्षिका-
मारभ्य क्रमेण—

गणपतिरसि गौर्यसि पद्मासि शच्यसि मेधासि सावि-
त्र्यसि विजयासि जयासि देवसेनासि स्वधासि स्वाहासि मातरः
स्थ लोकमातरः स्थ हृष्टिरसि पुष्टिरसि तुष्टिरसि आत्मकुल-
देवतासि श्रीरसि इत्युक्त्वा अक्षतानादाय पुनः—प्रथमरक्षिका-
मारभ्य ।

ॐ भूर्भुवः स्वः गणपते इहागच्छ इह तिष्ठ । ॐ
भूर्भुवः स्वः गौरि इहागच्छ इह तिष्ठ । ॐ भूर्भुवः स्वः पद्मे
इहागच्छ इह तिष्ठ । ॐ भूर्भुवः स्वः शचि इहागच्छ इह तिष्ठ ।
ॐ भूर्भुवः स्वः मेधे इहागच्छ इह तिष्ठ । ॐ भूर्भुवः स्वः
सावित्रि इहागच्छ इह तिष्ठ । ॐ भूर्भुवः स्वः विजये इहागच्छ
इह तिष्ठ । ॐ भूर्भुवः स्वः जये इहागच्छ इह तिष्ठ । ॐ भूर्भुवः
स्वः देवसेने इहागच्छ इह तिष्ठ । ॐ भूर्भुवः स्वः स्वधे इहा-
गच्छ इह तिष्ठ । ॐ भूर्भुवः स्वः स्वाहे इहागच्छ इह तिष्ठ । ॐ
भूर्भुवः स्वः मातरः इहागच्छत इह तिष्ठत । ॐ भूर्भुवः स्वः
लोकमातरः इहागच्छत इह तिष्ठत । ॐ भूर्भुवः स्वः हृष्टे इहा-
गच्छ इह तिष्ठ । ॐ भूर्भुवः स्वः पुष्टे इहागच्छ इह तिष्ठ । ॐ
भूर्भुवः स्वः तुष्टे इहागच्छ इह तिष्ठ । ॐ भूर्भुवः स्वः आत्मकुल-

देवते इहागच्छ इह तिष्ठ। ॐ भूर्भुवः स्वः श्रीः इहागच्छ इह तिष्ठ।

एवं गणपतिसहिता एता मातॄः श्रियं च प्रत्येकमोङ्कार-व्याहृतिपूर्वकमावाह्य स्थापयित्वा—

ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनो-त्वरिष्टं यज्ञꣳसमिमं दधातु ।विश्वे देवासऽइह मादयन्तामो-३म्प्रतिष्ठ ॥

इत्यक्षतान् विकीर्य एकदैव प्रतिष्ठां कुर्यात् ॥

ततः पाद्यादि गृहीत्वा प्रथमत आरभ्य एतानि पाद्यार्घ्या-चमनीयस्नानीयपुनराचमनीयानि ॥

ॐ गणपतये नम इदमनुलेपनम्। ॐ गणपतये नमः इमानि पुष्पाणि। ॐ गणपतये नम इति त्रिः पूजयेत् ॥

एतानि गन्धपुष्पधूपदीपताम्बूलनैवेद्यान्यर्पयेत् ॥

ॐ गणपतये नमः। एवमेव ॐ गौर्यै नमः। ॐ पद्मायै नमः। ॐ शच्यै नमः। ॐ मेधायै नमः। ॐ सावित्र्यै नमः। ॐ विजयायै नमः। ॐ जयायै नमः। ॐ देवसेनायै नमः। ॐ स्वधायै नमः। ॐ स्वाहायै नमः। ॐ मातृभ्यो नमः। ॐ लोक-मातृभ्यो नमः। ॐ हृष्टयै नमः। ॐ पुष्टयै नमः। ॐ तुष्टयै नमः। ॐ आत्मनः कुलदेवतायै नमः। ॐ श्रियै नमः ॥

इति पाद्यादिभिः प्रत्येकमर्चयेत् ॥

ततो गणपतिश्रीसहिताः षोडश मातरः क्षमध्वम् इति विसर्जनम् ॥

ॐ श्रीर्मयि रमस्वेति ॥

ततो घृतेन भित्तौ पञ्च सप्त वा रेखा उत्तरोत्तरक्रमेण कुर्यात् ॥

ताश्च यत्नेन प्रतिच्छेदनेन मन्त्रेण—

ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः ॥

इत्यनेन भित्तौ त्रिः पञ्च सप्त वा घृतधारा दद्यात् ॥



# संक्षिप्तनान्दीश्राद्धम्

आचम्य प्राणानायम्य—

कर्तव्येऽस्मिन् पूर्वसङ्कल्पिते कर्मणि साङ्कल्पिकनान्दीश्राद्धमहं करिष्ये ।

एतच्छ्राद्धीयाग्रभागफलपुष्पाणि यज्ञेश्वराय विष्णवे नमः ॥

यज्ञेश्वरो हव्यसमस्तकव्यभोक्ताव्ययात्मा हरिरीश्वरोऽत्र ।
तत्सन्निधानादपयान्तु सद्यो रक्षांस्यशेषाण्यसुराश्च सर्वे ॥

सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखाः, ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ।

अमुकगोत्राः मातृपितामहीप्रपितामह्यो नान्दीमुख्यः, ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः। अमुकगोत्राः पितृपितामहप्रपितामहा नान्दीमुखाः, ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः। द्वितीयगोत्रा मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखाः, ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः। सत्यवसुसंज्ञानां विश्वेषां देवानां नान्दीमुखानाम् ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा। नान्दीश्राद्धे क्षणौ क्रियेताम्। ॐ तथा प्राप्नुतां भवन्तौ, प्राप्नवाव। अमुकगोत्रा मातृपितामहीप्रपितामह्यः नान्दीमुख्यः, ॐ भूर्भुवः स्वः इदमासनं स्वाहा। नान्दीश्राद्धे क्षणौ क्रियेताम्। ॐ तथा प्राप्नुतां भवन्तौ, प्राप्नुवः। नान्दीश्राद्धे अमुकगोत्राः पितृपितामहप्रपितामहा नान्दीमुखाः, ॐ भूर्भुवः स्वः इदमासनं स्वाहा। नान्दीमुखे क्षणौ क्रियेताम्। ॐ तथा प्राप्नुतां भवन्तौ प्राप्नवाव। द्वितीयगोत्रा मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखाः, ॐ भूर्भुवः स्वः इदमासनं स्वाहा नान्दीश्राद्धे क्षणौ क्रियेताम्। ॐ तथा प्राप्नुतां भवन्तौ प्राप्नवाव। सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः। अमुकगोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यः

ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्य ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः द्वितीयगोत्रेभ्यः मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः नान्दीमुखेभ्यः ॐ भूर्भुवः स्वः इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः। सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखाः, ॐ भूर्भुवः स्वः इदं वो युग्मब्राह्मणभोजनपर्याप्तं दास्यमानमन्नममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः। अमुकगोत्रा मातृपितामहीप्रपितामह्यः नान्दीमुख्यः, ॐ भूर्भुवः स्वः इदं वो युग्मब्राह्मणभोजनपर्याप्तं दास्यमानमन्नममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः। अमुकगोत्राः पितृपितामहप्रपितामहा नान्दीमुखाः, ॐ भूर्भुवः स्वः इदं वो युग्मब्राह्मणभोजनपर्याप्तं दास्यमानमन्नममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः। द्वितीयगोत्रा मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखाः, ॐ भूर्भुवः स्वः इदं वो युग्मब्राह्मणभोजनपर्याप्तं दास्यमानमन्नममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः। स्वस्ति नऽइन्द्रो० इति मन्त्रं पठेत्। अस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यः, अमुकगोत्राभ्यः मातृपितामहीप्रपितामहीभ्यः नान्दीमुखीभ्यः, अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः नान्दी-

